# ShrI Sharabha Sahasranamastotra 3

# श्रीशरभसहस्रनामस्तोत्रम् ३

## Document Information



Text title : sharabhasahasranAmastotram 3

File name : sharabhasahasranAmastotra3.itx

Category : sahasranAma, shiva

Location : doc_shiva

Transliterated by : Ravin Bhalekar

Proofread by : Ravin Bhalekar, Pallasena Narayanaswami ppnswami at gmail.com

Description-comments : Shivanamamanjari 1 Edited by S.V.Radhakrishnanji

Acknowledge-Permission: Mahaperiaval Trust

Latest update : August 27, 2017

Send corrections to : Sanskrit@cheerful.com



April 17, 2020

*sanskritdocuments.org*



# श्रीशरभसहस्रनामस्तोत्रम् ३



श्रीशिव उवाच ॥

विनियोगः-

ॐ अस्य श्री शरभसहस्रनामस्तोत्रमन्त्रस्य,
कालाग्निरुद्रो वामदेव ऋषिः, अनुष्टुप् छन्दः,
श्रीशरभ-सालुवो देवता, हस्रां बीजं, स्वाहा शक्तिः, फट् कीलकं,
श्रीशरभ-सालुव प्रसादसिद्ध्यर्थे जपे विनियोगः ॥

करन्यास एवं हृदयादिन्यासः ।
ॐ हस्रां अङ्गुष्ठाभ्यां नमः । हृदयाय नमः ।
ॐ हस्रीं तर्जनीभ्यां नमः । शिरसे स्वाहा ।
ॐ हस्रूं मध्यमाभ्यां नमः । शिखायै वषट् ।
ॐ हस्रैं अनामिकाभ्यां नमः । कवचाय हुं ।
ॐ हस्रौं कनिष्ठिकाभ्यां नमः । नेत्रत्रयाय वौषट् ।
ॐ हस्रः करतलकरपृष्ठाभ्यां नमः । अस्त्राय फट् ।
ॐ भुर्भुवः स्वरोम् इति दिग्बन्धः ॥

ध्यानम् ॥

क्काकाशः क्व समीरणः क्व दहनः क्वापः क्व विश्वम्भरः
क्व ब्रह्मा क्व जनार्दनः क्व तरणिः क्वेन्दुः क्व देवासुराः ।
कल्पान्ते शरभेश्वरः प्रमुदितः श्रीसिद्धयोगीश्वरः
क्रीडानाटकनायको विजयते देवो महासालुवः ॥

लं पृथिव्यादि पञ्चोपचारैः सम्पूजयेत् ।

॥ अथ सहस्रनामः ॥

श्रीभैरव उवाच ।

श्रीनाथो रेणुकानाथो जगन्नाथो जगाश्रयः ।
श्रीगुरुर्गुरुगम्यश्च गुरुरूपः कृपानिधिः ॥ १॥

हिरण्यबाहुः सेनानीर्दिक्पतिस्तरुराट् हरः ।
हरिकेशः पशुपतिर्महान्सस्पिञ्जरो मृडः ॥ २॥

गणेशो गणनाथश्च गणपूज्यो गणाश्रयः ।
विव्याधी बभ्लुशः श्रेष्ठः परमात्मा सनातनः ॥ ३॥

पीठेशः पीठरूपश्च पीठपूज्यः सुखावहः ।
सर्वाधिको जगत्कर्ता पुष्टेशो नन्दिकेश्वरः ॥ ४॥

भैरवो भैरवश्रेष्ठो भैरवायुधधारकः ।
आततायी महारुद्रः संसारार्कसुरेश्वरः ॥ ५॥

सिद्धः सिद्धिप्रदः साध्यः सिद्धमण्डलपूजितः ।
उपवीती महानात्मा क्षेत्रेशो वननायकः ॥ ६॥

बहुरूपो बहुस्वामी बहुपालनकारणः ।
रोहितः स्थपतिः सूतो वाणिजो मन्त्रिरुन्नतः ॥ ७॥

पदरूपः पदप्राप्तः पदेशः पदनायकः ।
कक्षेशो हुतभूग् देवो भुवन्तिर्वारिवस्कृतः ॥ ८॥

दूतिक्रमो दूतिनाथः शाम्भवः शङ्करः प्रभुः ।
उच्चैर्घोषो घोषरूपः पत्तीशः पापमोचकः ॥ ९॥

वीरो वीर्यप्रदः शूरो वीरेशवरदायकः । var वीरेशो वरदायकः
ओषधीशः पञ्चवक्रः कृत्स्नवीतो भयानकः ॥ १०॥

वीरनाथो वीररूपो वीरहाऽऽयुधधारकः ।
सहमानः स्वर्णरेता निव्याधी निरूपप्लवः ॥ ११॥

चतुराश्रमनिष्ठश्च चतुर्मूर्तिश्चतुर्भुजः ।
आव्याधिनीशः ककुभो निषङ्गी स्तेनरक्षकः ॥ १२॥

षष्टीशो घटिकारूपः फलसङ्केतवर्धकः ।
मन्त्रात्मा तस्कराध्यक्षो वञ्चकः परिवञ्चकः ॥ १३॥

नवनाथो नवाङ्कस्थो नवचक्रेश्वरो विभुः ।
अरण्येशः परिचरो निचेरुः स्तायुरक्षकः ॥ १४॥

वीरावलीप्रियः शान्तो युद्धविक्रमदर्शकः ।
प्रकृतेशो गिरिचरः कुलुञ्चेशो गुहेष्टदः ॥ १५॥

पञ्चपञ्चकतत्त्वस्थस्तत्त्वातीतस्वरूपकः ।
भवः शर्वो नीलकण्ठः कपर्दी त्रिपुरान्तकः ॥ १६॥

श्रीमन्त्रः श्रीकलानाथः श्रेयदः श्रेयवारिधिः ।
मुक्तकेशो गिरिशयः सहस्राक्षः सहस्रपात् ॥ १७॥

मालाधरो मनःश्रेष्ठो मुनिमानसहंसकः ।
शिपिविष्टश्चन्द्रमौलिर्हंसो मीढुष्टमोऽनघः ॥ १८॥

मन्त्रराजो मन्त्ररूपो मन्त्रपुण्यफलप्रदः ।
ऊर्व्यः सूर्व्योंघ्रियः शीभ्यः प्रथमः पावकाकृतिः ॥ १९॥

गुरुमण्डलरूपस्थो गुरुमण्डलकारणः ।
अचरस्तारकस्तारोऽवस्वन्योऽनन्तविग्रहः ॥ २०॥

तिथिमण्डलरूपश्च वृद्धिक्षयविवर्जितः ।
द्वीप्यः स्रोतस्य ईशानो धुर्यो गव्यगतोदयः ॥ २१॥ var भव्यकथोदयः

प्रथमः प्रथमाकारो द्वितीयः शक्तिसंयुतः ।
गुणत्रय तृतीयोऽसौ युगरूपश्चतुर्थकः ॥ २२॥

पूर्वजोऽवरजो ज्येष्ठः कनिष्ठो विश्वलोचनः ।
पञ्चभूतात्मसाक्षीशो ऋतुः षड्गुणभावनः ॥ २३॥

अप्रगल्भो मध्यमोर्म्यो जघन्योऽजघन्यः शुभः ।
सप्तधातुस्वरूपश्चाष्टमहासिद्धिसिद्धिदः ॥ २४॥

प्रतिसर्पोऽनन्तरूपो सोभ्यो याम्यः सुराश्रयः । var प्रतिसूर्यो
नवनाथनवमीस्थो दशदिग्रूपधारकः ॥ २५। var नवनाथो नवार्थस्थः
रुद्र एकादशाकारो द्वादशादित्यरूपकः ।
वन्योऽवसान्यः पूतात्मा श्रवः कक्षः प्रतिश्रवाः ॥ २६॥

व्यञ्जनो व्यञ्जनातीतो विसर्गः स्वरभूषणः । var वञ्जनो वञ्जनातीतः
आशुषेणो महासेनो महावीरो महारथः ॥ २७॥

अनन्त अव्यय आद्य आदिशक्तिवरप्रदः । var अनन्तो अव्ययो आद्यो

श्रुतसेनः श्रुतसाक्षी कवची वशकृद्वशः ॥ २८॥

आनन्दश्चाद्यसंस्थान आद्याकारणलक्षणः ।
आहनन्योऽनन्यनाथो दुन्दुम्यो दुष्टनाशनः ॥ २९॥

कर्ता कारयिता कार्यः कार्यकारणभावगः ।
धृष्णः प्रमृश ईड्यात्मा वदान्यो वेदसम्मतः ॥ ३०॥ var वेदवित्तमः

कलनाथः कलालीतः काव्यनाटकबोधकः ।
तीक्ष्णेषुपाणिः प्रहितः स्वायुधः शस्त्रविक्रमः ॥ ३१॥ var तीक्ष्णेषुर्वाणीविधृतः

कालहन्ता कालसाध्यः कालचक्रप्रवर्तकः ।
सुधन्वा सुप्रसन्नात्मा प्रविविक्तः सदागतिः ॥ ३२॥

कालाग्निरुद्रसन्दीप्तः कालान्तकभयङ्करः ।
खड्गीशः खड्गनाथश्च खड्गशक्ति परायणः ॥ ३३॥

गर्वघ्नः शत्रुसंहर्ता गमागमविवर्जितः ।
यज्ञकर्मफलाध्यक्षो यज्ञमूर्तिरनातुरः ॥ ३४॥

घनश्यामो घनानन्दी घनाधारप्रवर्तकः ।
घनकर्ता घनत्राता घनबीजसमुत्थितः ॥ ३५॥

लोप्यो लप्यः पर्णसद्यः पर्ण्यः पूर्णः पुरातनः ।
डकारसन्धिसाध्यान्तो वेदवर्णनसाङ्गकः ॥ ३६॥

भूतो भूतपतिर्भूपो भूधरो भूधरायुधः ।
छन्दःसारः छन्दकर्ता छन्द अन्वयधारकः ॥ ३७॥

भूतसङ्गो भूतमूर्तिर्भूतिहा भूतिभूषणः ।
छत्रसिंहासनाधीशो भक्तच्छत्रसमृद्धिमान् ॥ ३८॥

मदनो मादको माद्यो मधुहा मधुरप्रियः ।
जपो जपप्रियो जप्यो जपसिद्धिप्रदायकः ॥ ३९॥

जपसङ्घो जपाकारः सर्वमन्त्रजपप्रियः ।
मधुर्मधुकरः शूरो मधुरो मदनान्तकः ॥ ४०॥

झषरूपधरो देवो झषवृद्धिविवर्धकः ।
यमशासनकर्ता च समपूज्यो यमाधिपः ॥ ४१॥

निरञ्जनो निराधारो निर्लिप्तो निरुपाधिकः ।
टङ्कायुधः शिवप्रीतष्टङ्कारो लाङ्गलाश्रयः ॥ ४२॥

निष्प्रपञ्चो निराकारो निरीहो निरुपद्रवः ।
सपर्याप्रतिडामर्यो मन्त्रडामरस्थापकः ॥ ४३॥

सत्त्वं सत्त्वगुणोपेतः सत्त्ववित्सत्त्ववित्प्रियः ।
सदाशिवोह्युग्ररूपः पक्षविक्षिप्तभूधरः॥ ४४॥

धनदो धननाथश्च धनधान्यप्रदायकः ।
“(ॐ) नमो रुद्राय रौद्राय महोग्राय च मीढुषे” ॥ ४५॥

नादज्ञानरतो नित्यो नादान्तपददायकः ।
फलरूपः फलातीतः फलं अक्षरलक्षणः ॥ ४६॥

(ॐ) श्रीं ह्रीं क्लीं सर्वभूताद्यो भूतिहा भूतिभूषणः ।
रुद्राक्षमालाभरणो रुद्राक्षप्रियवत्सलः ॥ ४७॥

रुद्राक्षवक्षा रुद्राक्षरूपो रुद्राक्षभूषणः ।
फलदः फलदाता च फलकर्ता फलप्रियः ॥ ४८॥

फलाश्रयः फलालीतः फलमूर्तिर्निरञ्जनः ।
बलानन्दो बलग्रामो बलीशो बलनायकः ॥ ४९॥

(ॐ) खें खां घ्रां ह्वां वीरभद्रः सम्राट् दक्षमखान्तकः ।
भविष्यज्ञो भयत्राता भयकर्ता भयारिहा ॥ ५०॥

विघ्नेश्वरो विघ्नहर्ता गुरुर्देवशिखामणिः ।
भावनारूपध्यानस्थो भावार्थफलदायकः ॥ ५१॥

(ॐ) श्रां ह्वां कल्पितकल्पस्थः  कल्पनापूरणालयः ।
भुजङ्गविलसत्कण्ठो भुजङ्गाभरणप्रियः ॥ ५२॥

(ॐ) ह्रीं ह्रूं मोहनकृत्कर्ता छन्दमानसतोषकः ।
मानातीतः स्वयं मान्यो भक्तमानससंश्रयः ॥ ५३॥

नागेन्द्रचर्मवसनो नारसिंहनिपातनः ।
रकारः अग्निबीजस्थः अपमृत्युविनाशनः ॥ ५४॥

(ॐ) प्रें प्रें प्रें पेरं ह्वां दुष्टेष्टो मृत्युहा मृत्युपूजितः । var प्रें प्रैं प्रों प्रहृष्टेष्टदः
व्यक्तो व्यक्ततमोऽव्यक्तो रतिलावण्यसुन्दरः ॥ ५५॥

रतिनाथो रतिप्रीतो निधनेशो धनाधिपः ।
रमाप्रियकरो रम्यो लिङ्गो लिङ्गात्मविग्रहः ॥ ५६॥

(ॐ) क्ष्रौं क्ष्रौं क्ष्रौं क्ष्रौं ग्रहाकरो रत्नविक्रयविग्रहः ।
ग्रहकृद् ग्रहभृद् ग्राही गृहाद् गृहविलक्षणः ॥ ५७॥

“ॐ नमः पक्षिराजाय दावाग्निरूपरूपकाय ।
घोरपातकनाशाय सूर्यमण्डलसुप्रभुः” ॥ ५८॥ var शरभशाल्वाय हुं फट्

पवनः पावको वामो महाकालो महापहः ।
वर्धमानो वृद्धिरूपो विश्वभक्तिप्रियोत्तमः ॥ ५९॥

ॐ ह्रूं ह्रूं सर्वगः सर्वः सर्वजित्सर्वनायकः ।
जगदेकप्रभुः स्वामी जगद्वन्द्यो जगन्मयः ॥ ६०॥

सर्वान्तरः सर्वव्यापी सर्वकर्मप्रवर्तकः ।
जगदानन्ददो जन्मजरामरणवर्जितः ॥ ६१॥

सर्वार्थसाधकः साध्यसिद्धिः साधकसाधकः ।
खट्वाङ्गी नीतिमान्सत्यो देवतात्मात्मसम्भवः ॥ ६२॥

हविर्भोक्ता हविः प्रीतो हव्यवाहनहव्यकृत् ।
कपालमालाभरणः कपाली विष्णुवल्लभः ॥ ६३॥

ॐ ह्रीं प्रवेश रोगाय स्थूलास्थूलविशारदः । var प्रों वं शं शरण्यः
कलाधीशस्त्रिकालज्ञो दुष्टावग्रहकारकः ॥ ६४॥

(ॐ) हुं हुं हुं हुं नटवरो महानाट्यविशारदः ।
क्षमाकरः क्षमानाथः क्षमापूरितलोचनः ॥ ६५॥

वृषाङ्को वृषभाधीशः क्षमासाधनसाधकः ।
क्षमाचिन्तनसुप्रीतो वृषात्मा वृषभध्वजः ॥ ६६॥

(ॐ) क्रों क्रों क्रों क्रों महाकायो महावक्षो महाभुजः ।
मूलाधारनिवासश्च गणेशः सिद्धिदायकः ॥ ६७॥

महास्कन्धो महाग्रीवो महद्वक्त्रो महच्छिरः ।
महदोष्ठो महौदर्यो महादंष्ट्रो महाहनुः ॥ ६८॥

सुन्दरभ्रूः सुनयनः षट् चक्रो वर्णलक्षणः । var सर्वलक्षणः

मणिपूरो महाविष्णुः सुललाटः सुकन्धरः ॥ ६९॥

सत्यवाक्यो धर्मवेत्ता प्रजासर्जनकारणः । var प्रजासृजनकारणः
स्वाधिष्ठाने रुद्ररूपः सत्यज्ञः सत्यविक्रमः ॥ ७०॥

(ॐ) ग्लौं ग्लौं ग्लौं ग्लौं महादेव द्रव्यशक्तिसमाहितः ।
कृतज्ञ कृतकृत्यात्मा कृतकृत्यः कृतागमः ॥ ७१॥

(ॐ) हं हं हं हं गुरुरूपो हंसमन्त्रार्थमन्त्रकः ।
व्रतकृद् व्रतविच्छ्रेष्ठो व्रतविद्वान्महाव्रती ॥ ७२॥

सहस्रारेसहस्राक्षः व्रताधारो वृतेश्वरः ।
व्रतप्रीतो व्रताकारो व्रतनिर्वाणदर्शकः ॥ ७३॥

"ॐ ह्रीं ह्रूं क्लीं श्रीं क्लीं ह्रीं फट् स्वाहा" ।
अतिरागी वीतरागः कैलासेऽनाहतध्वनिः ।
मायापूरकयन्त्रस्थो रोगहेतुर्विरागवित् ॥ ७४॥

रागघ्नो रागशमनो लम्बकाश्यभिषिञ्चिनः । var रञ्जको रगवर्जितः
सहस्रदलगर्भस्थः चन्द्रिकाद्रवसंयुतः ॥ ७५॥

अन्तनिष्ठो महाबुद्धिप्रदाता नीतिवित्प्रियः । var नीतिसंश्रयः
नीतिकृन्नीतिविन्नीतिरन्तर्यागस्वयंसुखी ॥ ७६॥

विनीतवत्सलो नीतिस्वरूपो नीतिसंश्रयः ।
स्वभावो यन्त्रसञ्चारस्तन्तुरूपोऽमलच्छविः ॥ ७७॥

क्षेत्रकर्मप्रवीणश्च क्षेत्रकीर्तनवर्धनः । var क्षेत्रकर्तन
क्रोधजित्क्रोधनः क्रोधिजनवित् क्रोधरूपधृत् ॥ ७८॥

विश्वरूपो विश्वकर्ता चैतन्यो यन्त्रमालिकः ।
मुनिध्येयो मुनित्राता शिवधर्मधुरन्धरः ॥ ७९॥

धर्मज्ञो धर्मसम्बन्धि ध्वान्तघ्नो ध्वान्तसंशयः ।
इच्छाज्ञानक्रियातीतप्रभावः पार्वतीपतिः ॥ ८०॥

हं हं हं हं लतारूपः कल्पनावाञ्छितप्रदः ।
कल्पवृक्षः कल्पनस्थः पुण्यश्लोकप्रयोजकः ॥ ८१॥

प्रदीपनिर्मलप्रौढः परमः परमागमः ।
(ॐ) ज्रं ज्रं ज्रं सर्वसङ्क्षोभ सर्वसंहारकारकः ॥ ८२॥

क्रोधदः क्रोधहा क्रोधी जनहा क्रोधकारणः ।
गुणवान् गुणविच्छ्रेष्ठो वीर्यविद्वीर्यसंश्रयः ॥ ८३॥

गुणाधारो गुणाकारः सत्त्वकल्याणदेशिकः ।
सत्वरः सत्त्वविद्भावः सत्यविज्ञानलोचनः ॥ ८४॥

“ॐ ह्रां ह्रीं ह्रूं क्लीं श्रीं ब्लूं प्रों ॐ ह्रीं क्रों हुं फट् स्वाहा”।
वीर्याकारो वीर्यकरश्छन्नमूलो महाजयः ।
अविच्छिन्नप्रभावश्री वीर्यहा वीर्यवर्धकः ॥ ८५॥

कालवित्कालकृत्कालो बलप्रमथनो बली ।
छिन्नपापश्छिन्नपाशो विच्छिन्नभययातनः ॥ ८६॥

मनोन्मनो मनोरूपो विच्छिन्नभयनाशनः ।
विच्छिन्नसङ्गसङ्कल्पो बलप्रमथनो बलः ॥ ८७॥

विद्याप्रदाता विद्येशः शुद्धबोधसदोदितः ॥ var शुद्धबोधसुबोधितः
शुद्धबोधविशुद्धात्मा विद्यामन्त्रैकसंश्रयः ॥ ८८॥

शुद्धसत्वो विशुद्धान्तविद्यावेद्यो विशारदः ।
Extra verse in text with variation
गुणाधारो गुणाकारः सत्त्वकल्याणदेशिकाः ॥ ८९॥

सत्त्वरः सत्त्वसकृआवः सत्त्वविज्ञानलोचनः ।
वीर्यवान्वीर्यविच्छ्रेष्ठः सत्त्वविद्यावबोधकः॥ ८९॥ var वीर्यविद्वीर्यसंश्रयः

अविनाशो निराभासो विशुद्धज्ञानगोचरः ।
ॐ ह्रीं श्रीं ऐं सौं शिव कुरु कुरु स्वाहा ।
संसारयन्त्रवाहाय महायन्त्रपप्रतिने ॥ ९०॥

“नमः श्रीव्योमसूर्याय मूर्ति वैचित्र्यहेतवे” ।
जगज्जीवो जगत्प्राणो जगदात्मा जगद्गुरुः ॥ ९१॥

आनन्दरूपनित्यस्थः प्रकाशानन्दरूपकः ।
योगज्ञानमहाराजो योगज्ञानमहाशिवः ॥ ९२॥

अखण्डानन्ददाता च पूर्णानन्दस्वरूपवान् ।
“वरदायाविकाराय सर्वकारणहेतवे ॥ ९३॥

कपालिने करालाय पतये पुण्यकीर्तये ।
अघोरायाग्निनेत्राय दण्डिने घोररूपिणे ॥ ९४॥

भिषग्गण्याय चण्डाय अकुलीशाय शम्भवे ।
ह्रूं क्षुं रूं क्लीं सिद्धाय् नमः" ।
घण्डारवः सिद्धगण्डो गजघण्टाध्वनिप्रियः ॥ ९५॥

गगनाख्यो गजावासो गरलांशो गणेश्वरः ।
सर्वपक्षिमृगाकारः सर्वपक्षिमृगाधिपः ॥ ९६॥

चित्रो विचित्रसङ्कल्पो विचित्रो विशदोदयः ।
निर्भवो भवनाशश्च निर्विकल्पो विकल्पकृत् ॥ ९७॥

कक्षाविसलकः कर्त्ता कोविदः काश्मशासनः । var अक्शावित्पुलकः
Extra verses in text with variation
शुद्धबोधो विशुद्धात्मा विद्यामात्रैकसंश्रयः ॥ ९८॥

शुद्धसत्त्वो विशुद्धान्तविद्यावैद्यौ विशारदः ।
निन्दाद्वेषाइकर्ता च निन्दद्वेषापहारकः ॥ ९८॥

कालाग्निरुद्रः सर्वेशः शमरूपः शमेश्वरः ।
प्रलयानलकृद्धव्यः प्रलयानलशासनः ॥ ९९॥

त्रियम्बकोऽरिषड्वर्गनाशको धनदः प्रियः ।
अक्षोभ्यः क्षोभरहितः क्षोभदः क्षोभनाशकः ॥ १००॥

"ॐ प्रां प्रीं प्रूं प्रैं प्रौं प्रः मणिमन्त्रौषधादीनां
शक्तिरूपाय शम्भवे ।
अप्रेमयाय देवाय वषट् स्वाहा स्वधात्मने" ।
द्युमूर्धा दशदिग्बाहुश्चन्द्रसूर्याग्निलोचनः ।
पातालाङ्घ्रिरिलाकुक्षिः खंमुखो गगनोदरः ॥ १०१॥

कलानादः कलाबिन्दुः कलाज्योतिः सनातनः ।
अलौकिककनोदारः कैवल्यपददायकः ॥ १०२॥

कौल्यः कुलेशः कुलजः कविः कर्पूरभास्वरः ।
कामेश्वरः कृपासिन्धुः कुशलः कुलभूषणः ॥ १०३॥

कौपीनवसनः कान्तः केवलः कल्पपादपः ।

कुन्देन्दुशङ्खधवलो भस्मोद्धूलितविग्रहः ॥ १०४॥।

भस्माभरणहृष्टात्मा दुष्टपुष्टारिसूदनः । var षङ्गिरावृतः
स्थाणुर्दिगम्बरो भर्गो भगनेत्रभिदुज्ज्वलः ॥ १०५॥

त्रिकाग्निकालः कालाग्निरद्वितीयो महायशाः ।
सामप्रियः सामकर्ता सामगः सामगप्रियः ॥ १०६॥

धीरोदात्तो महाधीरो धैर्यदो धैर्यवर्धकः ।
लावण्यराशिः सर्वज्ञः सुबुद्धिर्बुद्धिमद्वरः ॥ १०७॥

तारणाश्रयरूपस्थस्तारणाश्रयदायकः ।
तारकस्तारकस्वामी तारणस्तारणप्रियः ॥ १०८॥

एकतारो द्वितारश्च तृतीयो मातृकाश्रयः ।
एकरूपश्चैकनाथो बहुरूपस्वरूपवान् ॥ १०९॥

लोकसाक्षी त्रिलोकेशस्त्रिगुणातीतमूर्तिमान् ।
बालस्तारुण्यरूपस्थो वृद्धरूपप्रदर्शकः ॥ ११०॥

अवस्थात्रयभूतस्थो अवस्थात्रयवर्जितः ।
वाच्यवाचकभावार्थो वाक्यार्थप्रियमानसः ॥ १११॥

सोहं वाक्यप्रमाणस्थो महावाक्यार्थबोधकः ।
परमाणुः प्रमाणस्थः कोटिब्रह्माण्डनायकः ॥ ११२॥

“ॐ हं हं हं हं ह्रीं वामदेवाय नमः” ।
कक्षवित्पालकः कर्ता कोविद् कामशासनः ।
कपर्दी केसरी कालः कल्पनारहिताकृतिः ॥ ११३॥

खखेलः खेचरः ख्यातः खन्यवादी खमुद्गतः ।
खाम्बरः खण्डपरशुः खचक्षुः खङ्ग्लोचनः ॥ ११४॥

अखण्डब्रह्मखण्डश्रीरखण्डज्योतिरव्ययः ।
षट् चक्रखेलनः स्रष्टा षट्ज्योतिषट्गिरार्चितः ॥ ११५॥ var षङ्गिरावृतः

गरिष्ठो गोपतिर्गोप्ता गम्भीरो ब्रह्मगोलकः ।
गोवर्धनगतिर्गोविद् गवावीतो गुणाकरः ॥ ११६॥

गङ्गधरोऽङ्गसङ्गम्यो गैङ्कारो गङ्करागमः । var गह्वरागमः
कर्पूरगौरो गौरीशो गौरीगुरुगुहाशयः ॥ ११७॥

धूर्जटिः पिङ्गलजटो जटामण्डलमण्डितः ।
मनोजवो जीवहेतुरन्धकासुरसूदनः ॥ ११८॥

लोकबन्धुः कलाधारः पाण्डुरः प्रमथाधिपः । var लोकधरः
अव्यक्तलक्षणो योगी योगीशो योगिपङ्गवः ॥ ११९॥

भूतावासो जनावासः सुरावासः सुमङ्गलः ।
भववैद्यो योगिवैद्यो योगीसिंहहृदासनः ॥ १२०॥

युगावासो युगाधीशो युगकृद्युगवन्दितः ।
किरीटालेढबालेन्दुः मणिङ्कणभूषितः ॥ १२१॥

रत्नाङ्गरागो रत्नेशो रत्नरञ्जितपादुकः ।
नवरत्नगुणोपेतकिरीटो रत्नकञ्चुकः ॥ १२२॥

नानाविधानेकरत्नलसत्कुण्डलमण्डितः ।
दिव्यरत्नगणोत्कीर्णकण्ठाभरणभूषितः ॥ १२३॥

नवफालामणिर्नासापुटभ्राजितमौक्तिकः ।
रत्नाङ्गुलीयविलसत्करशाखानखप्रभः ॥ १२४॥।

रत्नभ्राजद्धेमसूत्रलसत्कटितटः पटुः ।
वामाङ्गभागविलसत्पार्वतीवीक्षणप्रियः ॥ १२५॥

लीलाविडम्बितवपुर्भक्तमानसमन्दिरः ।
मन्दमन्दार-पुष्पौघलसद्वायुनिषेवितः ॥ १२६॥

कस्तूरीविलसत्फालोदिव्यवेषविराजितः ।
दिव्यदेहप्रभाकूटसन्दीपितदिगन्तरः ॥ १२७॥

देवासुरगुरुस्तव्यो देवासुरनमस्कृतः ।
हंसराजः प्रभाकूटपुण्डरीकनिभेक्षणः ॥ १२८॥

सर्वाशास्त्रगणोपेतः सर्वलोकेष्टभूषणः ।
सर्वेष्टदाता सर्वेष्टस्फुरन्मङ्गलविग्रहः ॥ १२९॥

अविद्यालेशरहितो नानाविद्यैकसंश्रयः ।
मूर्तीभावत्कृपापूरो भक्तेष्टफलपूरकः ॥ १३०॥

सम्पूर्णकामः सौभाग्यनिधिः सौभाग्यदायकः ।

हितैषी हितकृत्सौम्यः परार्थैकप्रयोजकः ॥ १३१॥

शरणागतदीनार्तपरित्राणपरायणः ।
विष्वञ्चिता वषट् कारो भ्राजिष्णुर्भोजनं हविः ॥ १३२॥

भोक्ता भोजयिता जेता जितारिर्जितमानसः ।
अक्षरः कारणो रुद्धः शमदः शारदाप्लवः ॥ १३३॥

आज्ञापकश्च गम्भीरः कविर्दुःस्वप्ननाशनः । var कलिर्दुःस्वप्ननाशनः
पञ्चब्रह्मसमुत्पत्तिः श्रेत्रज्ञः क्षेत्रपालकः ॥ १३४॥

व्योमकेशो भीमवेषो गौरीपतिरनामयः ।
भवाब्धितरणोपायो भगवान्भक्तवत्सलः ॥ १३५॥

वरो वरिष्ठस्तेजिष्ठः प्रियाप्रियवधः सुधीः ।
यन्ताऽयविष्ठः क्षोदिष्ठो यविष्ठो यमशासनः ॥ १३६॥ var रविक्रोधतिरस्कृतः

हिरण्यगर्भो हेमाङ्गो हेमरूपो हिरण्यदः ।
ब्रह्मज्योतिरनावेक्ष्यश्चामुण्डाजनको रवि ॥ १३७॥

मोक्षार्थिजनसंसेव्यो मोक्षदो मोक्षनायकः ।
महाश्मशाननिलयो वेदाश्वो भूरथस्थिरः ॥ १३८॥

मृगव्याधो धर्मधाम प्रभिन्नस्फटिकः प्रभः ।
सर्वज्ञः परमात्मा च ब्रह्मानन्दाश्रयो विभुः ॥ १३९॥

शरभेशो महादेवः परब्रह्म सदाशिवः ।
स्वराविकृतिकर्ता च स्वरातीतः स्वयंविभुः ॥ १४०॥

स्वर्गतः स्वर्गतिर्दाता नियन्ता नियताश्रयः ।
भूमिरूपो भूमिकर्ता भूधरो भूधराश्रयः ॥ १४१॥

भूतनाथो भूतकर्ता भूतसंहारकारकः ।
भविष्यज्ञो भवत्राता भवदो भवहारकः ॥ १४२॥

वरदो वरदाता च वरप्रीतो वरप्रदः ।
कूटस्थः कूटरूपश्च त्रिकूटो मन्त्रविग्रहः ॥ १४३॥

मन्त्रार्थो मन्त्रगम्यश्च मन्त्रेशो मन्त्रभागकः ।
सिद्धिमन्त्रः सिद्धिदाता जपसिद्धिस्वभावकः ॥ १४४॥

नामातिगो नामरूपो नामरूपगुणाश्रयः ।
गुणकर्ता गुणत्राता गुणातीता गुणरिहा ॥ १४५॥

गुणग्रामो गुणाधीशः गुणनिर्गुणकारकः ।
अकारमातृकारूपः अकारातीतभावनः ॥ १४६ ॥

परमैश्वर्यदाता च परमप्रीतिदायकः ।
परमः परमानन्दः परानन्दः परात्परः ॥ १४७॥

वैकुण्ठपीठमध्यस्थो वैकुण्ठो विष्णुविग्रहः ।
कैलासवासी कैलासे शिवरूपः शिवप्रदः ॥ १४८॥

जटाजूटोद्भूषिताङ्गो भस्मधूसरभूषणः ।
दिग्वासाः दिग्विभागश्च दिङ्गतरनिवासकः ॥ १४९॥

ध्यानकर्ता ध्यानमूर्तिर्धारणाधारणप्रियः ।
जीवन्मुक्तिपुरीनाथो द्वादशान्तस्थितप्रभुः ॥ १५०॥

तत्त्वस्थस्तत्त्वरूपस्थस्तत्त्वातीतोऽतितत्त्वगः ।
तत्त्वासाम्यस्तत्त्वगम्यस्तत्त्वार्थसर्वदर्शकः ॥ १५१॥

तत्त्वासनस्तत्त्वमार्गस्तत्त्वान्तस्तत्त्वविग्रहः ।
दर्शनादतिगो दृश्यो दृश्यातीतातिदर्शकः ॥ १५२॥

दर्शनो दर्शनातीतो भावनाकाररूपधृत् ।
मणिपर्वतसंस्थानो मणिभूषणभूषितः ॥ १५३॥

मणिप्रीतो मणिश्रेष्ठो मणिस्थो मणिरूपकः ।
चिन्तामणिगृहान्तस्थः सर्वचिन्ताविवर्जितः ॥ १५४॥

चिन्ताक्रान्तभक्तचिन्त्यो चिन्तनाकारचिन्तकः ।
अचिन्त्यश्चिन्त्यरूपश्च निश्चिन्त्यो निश्चयात्मकः ॥ १५५॥

निश्चयो निश्चयाधीशो निश्चयात्मकदर्शकः ।
त्रिविक्रमस्त्रिकालज्ञस्त्रिमूर्तिस्त्रिपुरान्तकः ॥ १५६॥

ब्रह्मचारी व्रतप्रीतो गृहस्थो गृहवासकः ।
परम्धाम परंब्रह्म परमात्मा परात्परः ॥ १५७॥

सर्वेश्वरः सर्वमयः सर्वसाक्षी विलक्षणः ।
मणिद्वीपो द्वीपनाथो द्वीपान्तो द्वीपलक्षणः ॥ १५८॥

सप्तसागरकर्ता च सप्तसागरनायकः ।
महीधरो महीभर्ता महीपालो महास्वनः ॥ १५९॥

महीव्याप्तोऽव्यक्तरूपः सुव्यक्तो व्यक्तभावनः ।
सुवेषाढ्यः सुखप्रीतः सुगमः सुगमाश्रयः ॥ १६०॥

तापत्रयाग्निसन्तप्तसमाह्लादनचन्द्रमाः ।
तारणस्तापसाराध्यस्तनुमध्यस्तमोमहः ॥ १६१॥

पररूपः परध्येयः परदैवतदैवतः ।
ब्रह्मपूज्यो जगत्पूज्यो भक्तपूज्यो वरप्रदः ॥ १६२॥

अद्वैतो द्वैतचित्तश्च द्वैताद्वैतविवर्जितः ।
अभेद्यः सर्वभेद्यश्च भेद्यभेदकबोधकः ॥ १६३॥

लाक्षारससवर्णाभः प्लवङ्गमप्रियोत्तमः ।
शत्रूसम्हारकर्ता च अवतारपरो हरः ॥ १६४॥

संविदीशः संविदात्मा संविज्ज्ञानप्रदायकः ।
संवित्कर्ता च भक्तश्च संविदानन्दरूपवान् ॥ १६५॥

संशयातीतसंहार्यः सर्वसंशयहारकः ।
निःसंशयमनोध्येयः संशयात्मातिदूरगः ॥ १६६॥

शैवमन्त्र शिवप्रीतदीक्षाशैवस्वभावकः ।
भूपतिः क्ष्माकृतो भूपो भूपभूपत्वदायकः ॥ १६७॥

सर्वधर्मसमायुक्तः सर्वधर्मविवर्धकः ।
सर्वशास्ता सर्ववेदः सर्ववेत्ता सतृप्तिमान् ॥ १६८॥

भक्तभावावतारश्च भुक्तिमुक्तिफलप्रदः ।
भक्तसिद्धार्थसिद्धिश्च सिद्धिबुद्धिप्रदायकः ॥ १६९॥

वाराणसीवासदाता वाराणसीवरप्रदः ।
वाराणसीनाथरूपो गङ्गामस्तकधारकः ॥ १७०॥

पर्वताश्रयकर्ता च लिङ्गं त्र्यम्बकपर्वतः ।
लिङ्गदेहो लिङ्गपतिर्लिङ्गपूज्योऽतिदुर्लभः ॥ १७१॥

रुद्रप्रियो रुद्रसेव्य उग्ररूप विराट् स्तुतः ।

मालारुद्राक्षभूषाङ्गो जपरुद्राक्षतोषितः ॥ १७२॥

सत्यसत्यः सत्यदाता सत्यकर्ता सदाश्रयः ।
सत्यसाक्षी सत्यलक्ष्मी लक्ष्म्यातीतमनोहरः ॥ १७३॥

जनको जगतामीशो जनिता जननिश्चयः ।
सृष्टिस्थितः सृष्टिरूपी सृष्टिरूपस्थितिप्रदः ॥ १७४॥

संहाररूपः कालाग्निः कालसंहाररूपकः ।
सप्तपातालपादस्थो महदाकाशशीर्षवान् ॥ १७५॥

अमृतश्चामृताकारः अमृतामृतरूपकः ।
अमृताकारचित्तिस्थः अमृतोकृवकारणः ॥ १७६॥

अमृताहारनित्यस्थस्त्वमृतोद्भवरूपवान् ।
अमृतांशोऽमृताधीशोऽमृतप्रीतिविवर्धनः ॥ १७७॥

अनिर्देश्यो अनिर्वाच्यो अनङ्गोऽनङ्गसंश्रयः ।
श्रयेदः श्रेयो रूपश्च श्रेयोऽतीतफलोत्तमः ॥ १७८॥

सारः संसारसाक्षी च सारासारविचक्षणः ।
धारणातीतभावस्थो धारणान्वयगोचरः ॥ १७९॥

गोचरो गोचरातीतः अतीव प्रियगोचरः ।
प्रियप्रियः तथा स्वार्थी स्वार्थः स्वार्थफलप्रदः ॥ १८०॥

अर्थार्थसाक्षी लक्षांशो लक्ष्यलक्षणविग्रहः ।
जगदीशो जगत्त्राता जगन्मयो जगद्गुरुः ॥ १८१॥

गुरुमूर्तिः स्वयंवेद्यो वेद्यवेदकरूपकः ।
रूपापीतो रूपकर्ता सर्वरूपार्थदायकः ॥ १८२॥

अर्थदस्त्वर्थमान्यच अर्थार्थी अर्थदायकः ।
विभवो वैभवः श्रेष्ठः सर्ववैभवादायकः ॥ १८३॥

चतुःषष्टिकलासूत्रः चतुःषष्टिकलामयः ।
पुराणश्रवणाकारः पुराणपुरुषोत्तमः ॥ १८४॥

पुरातनपुराख्यातः पूर्वजः पूर्वपूर्वकः ।
मन्त्रतन्त्रार्थसर्वज्ञः सर्वतन्त्रप्रकाशकः ॥ १८५॥

तन्त्रवेता तन्त्रकर्ता तन्त्रातरनिवासकः ।
तन्त्रगम्यस्तन्त्रमान्यस्तन्त्रयन्त्रफलप्रदः ॥ १८६॥

सर्वतन्त्रार्थतत्त्वज्ञस्तन्त्रराजः स्वतन्त्रकः ।
ब्रह्माण्डकोटिकर्ता च ब्रह्माण्डोदरपूरकः ॥ १८७॥

ब्रह्माण्डदेशदाता च ब्रह्मज्ञानपरायणः ।
स्वयम्भूः शम्भुरूपश्च हंसविग्रहनिस्पृहः ॥ १८८॥

श्वासिनिः श्वास उच्छ्वासः सर्वसंशयहारकः ।
सोऽहंरूपस्वभावश्च सोऽहंरूपप्रदर्शकः ॥ १८९॥

सोऽहमस्मीति नित्यस्थः सोऽहं हंसः स्वरूपवान् ।
हंसोहंसः स्वरूपश्च हंसविग्रहनिःस्पृहः ।
श्वासनिःश्वासौच्छ्वासः पक्षिराजो निरञ्जनः ॥ १९०॥

॥ फलश्रुति ॥

अष्टाधिकसहस्रं तु नाम साहस्रमुत्तमम् ।
नित्यं सङ्कीर्तनासक्तः कीर्तयेत्पुण्यवासरे ॥ १९१॥

सङ्क्रातौ विषुवे चैव पौर्णमास्यां विशेषतः ।
अमावस्यां रविवारे त्रिःसप्तवारपाठकः ॥ १९२॥

स्वप्ने दर्शनमाप्नोति कार्याकार्येऽपि दृश्यते ।
रविवारे दशावृत्या रोगनाशो भविष्यति ॥ १९३॥

सर्वदा सर्वकामार्थी जपेदेतत्तु सर्वदा ।
यस्य स्मरण मात्रेण वैरिणां कुलनाशनम् ॥ १९४॥

भोगमोक्षप्रदं श्रेष्ठं भुक्तिमुक्तिफलप्रदम् ।
सर्वपापप्रशमनं सर्वापस्मारनाशनम् ॥ १९५॥

राजचैरारि मृत्युनां नाशनं जयवर्धनम् ।
मारणे सप्तरात्रं तु दक्षिणाभिमुखो जपेत् ॥ १९६॥

उदङ् मुखः सहस्रं तु रक्षाणाय जपेन्नैशि ।
पठतां शृण्वतां चैव सर्वदुःखविनाशकृत् ॥ १९७॥

धन्यं यशस्यमायुष्यमारोग्यं पुत्रवर्धनम् ।
योगसिद्धिप्रदं सम्यक् शिवं ज्ञानप्रकाशितम् ॥ १९८॥

शिवलोकैकसोपानं वाञ्छितार्थैकसाधनम् ।
विषग्रहक्षयकरं पुत्रपौत्राभिवर्धनम् ॥ १९९॥

सदा दुःस्वप्नशमनं सर्वोत्पातनिवारणम् ।
यावन्न दृश्यते देवि शरभो भयनाशकः ॥ २००॥

तावन्न दृश्यते जाप्यं बृहदारण्यको भवेत् ।
सहस्रनाम नाम्न्यस्मिन्नेकैकोच्चारणात्पृथक् ॥ २०१॥

स्नातो भवति जाह्नव्यां दिव्या दृष्टिः स्थिरो भुवि ।
सहस्रनाम सद्विद्यां शिवस्य परमात्मनः ॥ २०२॥

योऽनुष्ठास्यति कल्पान्ते शिवकल्पो भविष्यति ।
हिताय सर्वलोकानां शरभेश्वर भाषितम् ॥ २०३॥

स ब्रह्मा स हरिः सोऽर्कः स शक्रो वरुणो यमः ।
धनाध्यक्षः स भगवान् सचैकः सकलं जगत् ॥ २०४॥

सुखाराध्यो महादेवस्तपसा येन तोषितः ।
सर्वदा सर्वकामार्थं जपेत्सिध्यति सर्वदा ॥ २०५॥

धनार्थी धनमाप्नोति यशोर्थी यश आप्नुयात् ।
निष्कामः कीर्तयेन्नैत्यं ब्रह्मज्ञानमयो भवेत् ॥ २०६॥

बिल्वैर्वा तुलसीपुष्पैश्चम्पकैर्बकुलादिभिः ।
कल्हारैर्जातिकुसुमैरम्बुजैर्वा तिलाक्षतैः ॥ २०७॥

एभिर्नाम सहस्रैस्तु पूजयेद् भक्तिमान्नरः ।
कुलं तारयते तेषां कल्पे कोटिशतैरपि ॥ २०८॥

॥ इति श्रीशरभसहस्रनामस्तोत्रम् (३) सम्पूर्णम् ॥

Entered by Ravin Bhalekar

Proofread by Ravin Bhalekar, Pallasena Narayanaswami ppnswami at gmail.com

